# कार्यारम्भे विचारः

किं भावयेत्? – फलस्य प्रयोजनस्य वा निर्णयः

- What to accomplish?

केन भावयेत्? – फलं प्राप्तुं साधनानां निर्णयः

- With what means to accomplish?

कथं भावयेत्? – साधनीयप्रकारस्य निर्णयः

- How to accomplish? (Process/Method)

# कथं भावयेत्? – प्रश्नस्यास्य किं महत्त्वम्?

# शास्त्रस्य आदर्श-स्वरूपम्

# भारतीय-शास्त्राणि अवैज्ञानिकानि इति कुतः (दुर)वगमनम्?

- **निर्दिष्ट-पद्धत्या विचाराणां प्रस्तुतिः विज्ञानम्** – Systematic presentation of thoughts is science
- **पाश्चात्यैः अभ्युगतया पद्धत्या शास्त्राणां प्रस्तुतिः नास्ति इति तानि अवैज्ञानिकानि इति उच्यन्ते** – Śāstras not presented in a format acceptable to westerners are branded as unscientific
- **भारतीया काचित् विचारधारा वर्तते, काचन निरूपण-पद्धतिः अस्ति, केचन परीक्षण-निकषाः सन्ति** – Indic tradition has its unique thought process, method of elucidation and testing criterion
- **तज्ज्ञानेन भारतीय-शास्त्राणां वैज्ञानिकत्वं बोद्धुं शक्यते** – By knowing those, the scientific nature of Indian Śāstras can be known
- **तद्यथा – आयुर्वेदे देहः अचेतनः इति तस्य चिकित्सा अशक्या मन्यते, पुरुषस्य चिकित्सा भवतीति पुरुष-स्वरूपं चर्च्यते** – Eg. In Āyurveda treatment is not for the insentient body but the sentient puruṣa, whose nature is discussed therein

# भारतीय-शास्त्राणि अवैज्ञानिकानि इति कुतः (दुर)वगमनम्?

- **अनुवादेन भ्रमः एव जायते – साक्षात् अनुवादः नास्ति – उदा.** History vs इतिहास, atom vs परमाणु – Translations mislead, there is no perfect translation
- **पाश्चात्य-भारतीय-पदार्थाः विचारधारा इ. सर्वं भिन्नम्, उभयोः मेलन-योग्यता नास्ति** – The western and Indic objects, thought process etc. are diverse and incompatible
- **भारतीय-विचार-धारायाः पद्धतेः च ज्ञानार्थं विना अनुवादं संस्कृतं ज्ञात्वा शास्त्राणि अध्येतव्यानि** – To comprehend the thought process and methodology in Indic thought the Śāstras should be studied by learning Sanskrit and not resorting to translation.

# ज्ञानस्य वैविध्यम् – अखण्डं ज्ञानम्

विद्या – सा विद्या या विमुक्तये

दर्शनम् – अनुभव-सहितं ज्ञानम् (Intuitive)

शास्त्रम् – सपद्धति ज्ञानस्य निरूपणम्

# अष्टादश विद्या-स्थानानि

## वेदाः 4

- ऋग्वेदः
- यजुर्वेदः
- सामवेदः
- अथर्वेदः

## वेदाङ्गानि 6

- शिक्षा
- कल्पः
- ज्योतिषम्
- व्याकरणम्
- निरुक्तम्
- छन्दस्

## उपाङ्गानि 4

- पुराणानि
- न्यायः
- मीमांसा
- धर्मशास्त्रम्

## उपवेदाः 4

- आयुर्वेदः (ऋग्वेद)
- धनुर्वेदः (यजुर्वेदः)
- गान्धर्ववेदः (सामवेदः)
- अर्थशास्त्रम् (अथर्ववेदः)

# दर्शनम् = Perception

**प्रधान-पमाणतया वेदस्य स्वीकृतौ**

दर्शनानि

- आस्तिक-
  - साङ्ख्य
  - योग
  - न्याय
  - वैशेषिक
  - पूर्वमामांसा
  - वेदान्त
- नास्तिक-
  - चार्वाक
  - बौद्ध
  - जैन

**अनुमान-प्रमाणस्य प्राधान्य-स्वीकृतौ**

# शास्त्र-कार्यम्

- सामान्य-धर्म-दर्शनम् – असमानेषु विषमेषु च सामान्य-धर्मस्य दर्शनम् = Abstraction of common properties in diverse objects

- विशेष-धर्म-दर्शनम् – सामान्येषु विशेष-दर्शनम् = Classification by grasping special features in common objects

# अविभक्तौ वागर्थौ

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।

[वाग्-अर्थौ इव सम्पृक्तौ वाग्-अर्थ-प्रतिपत्तये।
जगतः पितरौ वन्दे पार्वती-परमेश्वरौ।।]

I salute the parents of the world, Parvati and Parameshvara, who are united with each other like word and (its) meaning, in order to comprehend words and (their) meanings (well).

# प्रस्थानभेदः – मधुसूदन सरस्वती

*“साक्षाद् वा परम्परया वा पुमर्थ-योगिनां वेदोपकरणानाम् एव* ***प्रस्थानानां भेदः*** *अत्र प्रतिपाद्यते।”*

= प्रयोजन-भेदेन प्रस्थान-भेदः, न तु विषय-भेदेन

यतो हि विषयः = अखण्डं ज्ञानम्

# प्रस्थान-भेदः

- पुरुषार्थ-प्रधानो विचारः
  - धर्मः - Order, Principles
  - अर्थः - Wealth, Means
  - कामः - Objects, Desire
  - मोक्षः - Perfection, Completeness

# भारतीय-शास्त्राणि मोक्ष-विद्या एव वा?

द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च॥१.१.४॥ - मुण्डकोपनिषद्

The knowers of Brahman say that there are two vidyās that ought to be known, namely parā vidyā (higher/spiritual knowledge) and aparā vidyā (lower/worldly knowledge).

# चाणक्यसूत्राणि

- सुखस्य मूलं धर्मः।।1।।
- धर्मस्य मूलम् अर्थः।।2।।
- अर्थस्य मूलं राज्यम्।।3।।
- राज्यस्य मूलं इन्द्रियविजयः।।4।।
- इन्द्रियविजयस्य मूलं विनयः।।5।।
- विनयस्य मूलं वृद्धोपसेवा।।6।।

# अष्टादश विद्या-स्थानानि

| वेदाः 4 | वेदाङ्गानि 6 | उपाङ्गानि 4 | उपवेदाः 4 |
|---|---|---|---|
| • ऋग्वेदः | • शिक्षा | • पुराणानि | • आयुर्वेदः (ऋग्वेद) |
| • यजुर्वेदः | • कल्पः | • न्यायः | • धनुर्वेदः (यजुर्वेदः) |
| • सामवेदः | • ज्योतिषम् | • मीमांसा | • गान्धर्ववेदः (सामवेदः) |
| • अथर्वेदः | • व्याकरणम् | • धर्मशास्त्रम् | • अर्थशास्त्रम् (अथर्ववेदः) |
| | • निरुक्तम् | | |
| | • छन्दस् | | |

# आन्वीक्षिकी = न्याय-विचार-पद्धतिः

प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।

आश्रयस्सर्वधर्माणमां शश्वदान्वीक्षिकी मता।।

- अर्थशास्त्रम् 2.1

[प्रदीपः सर्वविद्यानाम् उपायः सर्वकर्मणाम्।

आश्रयः सर्वधर्माणमां शश्वद् आन्वीक्षिकी मता।।]

Always logic is considered to be (like) a light for all the vidyas, a means for (efficient performance) of all actions, (and) as the supporter for all dharmas.

# मीमांसा-प्रणीत-तात्पर्य-निर्णयः

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।

[उपक्रम-उपसंहारौ अभ्यासः अपूर्वता फलम्।
अर्थवाद-उपपत्ती च लिङ्गं तात्पर्य-निर्णये।।]

The introduction and the conclusion, repetition, novelty, purpose / consequence, glorification and logic – these are the determinants in determination of the import (of the doctrine prescribed in a discourse).

# सम्बन्ध-निरूपणं शास्त्रस्य कार्यम्

# शास्त्र-नियमः

- शास्त्रं नियमान् बोधयति, न तु करोति – Śāstras describe rules, they do not prescribe rules
- नियमाः जगति दृश्यमान-विषयाणां निरूपण-रूपाः भवन्ति – Rules are descriptions of objects / events cognized in the world
- नियमाः अतीन्द्रियविषयं प्रकाशयन्ति – Rules describe abstract things
- नियमः = अव्यभिचरितः सम्बन्धः – A relation without exception is a rule
- सम्बन्धः = विषय-निष्ठः धर्मः – Relation is a property of the object it resides in
- लक्षण-करणं शास्त्रस्य कार्यम् – Defining is the prime goal of śāstras

# शास्त्रस्य अर्थाः कुतः प्राप्यन्ते?

# शास्त्रं नाम किम्?

वक्तृ-श्रोत्रोः अभिमतम् अनन्यसाध्यं फलम् उद्दिश्य तत्साधनभूतं प्रमाणान्तर-अप्राप्तम् अर्थं प्रतिपादयतां वाक्यानां समूहः शास्त्रम्।

Śāstram is a collection of those statements which describe some sort of instruments/means that are not ascertained by any other means of cognition (pramāṇa) to obtain certain result which is not achievable from any other source and which is agreeable to both the speaker and listener.

लाघव-आश्रितं शास्त्रम्।

# शास्त्र-साधकम्

- **प्रमाणम्** – Evidence / validation
- **प्रमाण-दौर्बल्य-प्राबल्ये** – Strength & weakness of validation
- **लाघव-युक्तिः** – the logic of brevity / optimal solution stays
- **लोकानुभव-विरोधे न मानम्** – not valid if there is contradiction with common experience
- **लौकिक-न्याय-सञ्चारः** – prevalent common parameters
- **शास्त्रीय-न्यायाः** – parameters stipulated by shastras
- **युक्तिः** - logic
- **तर्कः** – proof by contradiction

# अष्टादश विद्या-स्थानानि

| वेदाः 4 | वेदाङ्गानि 6 | उपाङ्गानि 4 | उपवेदाः 4 |
| --- | --- | --- | --- |
| • ऋग्वेदः | • शिक्षा | • पुराणानि | • आयुर्वेदः (ऋग्वेद) |
| • यजुर्वेदः | • कल्पः | • न्यायः | • धनुर्वेदः (यजुर्वेदः) |
| • सामवेदः | • ज्योतिषम् | • मीमांसा | • गान्धर्ववेदः (सामवेदः) |
| • अथर्वेदः | • व्याकरणम् | • धर्मशास्त्रम् | • अर्थशास्त्रम् (अथर्ववेदः) |
| | • निरुक्तम् | | |
| | • छन्दस् | | |

# भारतीय-परम्परा प्रमा-केन्द्रिता

- प्रमा = Knowledge
- ज्ञान = Cognition

# अनुबन्धचतुष्टयम्

विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम्।
ग्रन्थादौ च प्रदातव्यम् अनुबन्ध-चतुष्टयम्।।

- अधिकारी
- विषयः
- प्रयोजनम्
- सम्बन्धः

# ग्रन्थ-परिचयः – ग्रन्थस्य महत्त्वं प्रयोजनं च

# शास्त्रस्य कार्यान्वयः – धर्म-धर्मि-भाव-सम्बन्ध-बोध-द्वारा

**हस्ते सुधाखण्डः**

- हस्तः - धर्मी
- सुधाखण्डः - धर्मः

**श्वेतः सुधाखण्डः**

- सुधाखण्डः – धर्मी
- श्वेतः – धर्मः

**श्वेतत्वं श्वेतवर्णे**

- श्वेतवर्णः – धर्मी
- श्वेतत्वं - धर्मः

# धर्म-प्रकारौ

# शास्त्र-भाषा

भाषा *vs* परिभाषा (परिच्छिन्ना भाषा)

- पाणिनीये
- न्याये
- आयुर्वेदे
- साङ्ख्ये
- वैशेषिके इत्यादि

# शास्त्रं नाम किम्?

**वक्तृ-श्रोत्रोः अभिमतम् अनन्यसाध्यं फलम् उद्दिश्य तत्साधनभूतं प्रमाणान्तर-अप्राप्तम् अर्थं प्रतिपादयतां वाक्यानां समूहः शास्त्रम्।**

Śāstram is a collection of those statements which describe some sort of instruments/means that are not ascertained by any other means of cognition (pramāṇa) to obtain certain result which is not achievable from any other source and which is agreeable to both the speaker and listener.

लाघव-आश्रितं शास्त्रम्।

# शास्त्र-कार्यम्

- सामान्य-धर्म-दर्शनम् – असमानेषु विषमेषु च सामान्य-धर्मस्य दर्शनम् = Abstraction of common properties in diverse objects

- विशेष-धर्म-दर्शनम् – सामान्येषु विशेष-दर्शनम् = Classification by grasping special features in common objects

# कार्य-कारण-भावः – उदाहरणम् - चाणक्यसूत्राणि

- सुखस्य मूलं धर्मः।।1।।
- धर्मस्य मूलम् अर्थः।।2।।
- अर्थस्य मूलं राज्यम्।।3।।
- राज्यस्य मूलं इन्द्रियविजयः।।4।।
- इन्द्रियविजयस्य मूलं विनयः।।5।।
- विनयस्य मूलं वृद्धोपसेवा।।6।।
- वृद्धसेवायाः विज्ञानवान्।।7।।
- विज्ञानेन आत्मानं सम्पादयेत्।।8।।

# व्याप्तिः – उदाहरणम् - चाणक्यसूत्राणि

- सम्पादितात्मा जितात्मा भवति।।9।। (यः सम्पादित-आत्मा सः जित-आत्मा) – One who is accomplished self-knowledge is the one who has won over one-self
- अर्थ-सम्पत् प्रकृति-सम्पदं करोति।।10।। (यत्र अर्थ-सम्पत् तत्र प्रकृति सम्पत्) – Material prosperity empowers the citizens.
- न असहायस्य मन्त्रनिश्चयः।।16।। (यः असहायः सः मन्त्र-निश्चय-अभाववान्) One who is unassisted (by ministers) is not sure of (efficacy of his) deliberation.
- सहायः समदुःखसुखः।।17।। (यः सहायः सः दुःखे सुखे समः) – An assistant is one who is equal in sorrow and joy. (Stands by in sorrow and joy equally, understands one's sorrow and joy with equal magnitude as one experiences them etc.)

# शास्त्र-नियमाः – उदाहरणम् - चाणक्यसूत्राणि

- विज्ञानेन आत्मानं सम्पादयेत्।।8।। - By wisdom one should attain self-knowledge
- जित-आत्मा सर्वार्थैः संयुज्येत।।10।। - One who has conquered oneself should engage in all endeavours (for universal welfare)
- सम्पाद्य आत्मानम् अन्विच्छेत् सहायवान्।।15।। - Having earned self-knowledge one should seek an assistant
- मानी प्रतिमानिनम् आत्मनि द्वितीयं मन्त्रम् उत्पादयेत्।।19।। - An assertive (administrator) should create in one-self a second counsel who counters (the assertions).

# अनुबन्ध-चतुष्टयम् – उदाहरणम् - तर्कसङ्ग्रहः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।

बालानां सुख-बोधाय क्रियते तर्कसङ्ग्रहः।।

- अधिकारी – बालः – ग्रहण-धारण-पटुः बालः, न तु स्तनन्धयः – One who is adept at grasping and retaining (the Shastra) is a baala, not an infant
- विषयः – सप्त पदार्थाः – तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः, द्रव्यादि-सप्त-पदार्थाः – those that are elucidated are tarkaaH, *in this case, they are) the seven entities (that the universe is claimed to be composed of in Nyaaya Shastra)
- प्रयोजनम् – सुख-बोधाय – सुखेन अनायासेन बोधः पदार्थ-ज्ञानम् – Knowledge of entities effortlessly
- सम्बन्धः – प्रतिपाद्य-प्रतिपादक-भावः – तर्क्यन्ते प्रतिपाद्यन्ते – the relation of the explained and the explanation

# परिभाषा – उदाहरणम् – अष्टाध्यायी

- वृद्धिरादैच् 1.1.1 – वृद्धिः आत् ऐच् – आ, ऐ, औ are वृद्धिः
- अदेङ्गुणः 1.1.2 – अत् एङ् गुणः – अ, ए, ओ are गुणः
- हलोऽनन्तराः संयोगः 1.1.7 - हलः अनन्तराः संयोगः – Consonants not intervened (and thereby uttered together) are संयोगः
- मुख-नासिका-वचनो अनुनासिकः 1.1.8 - The utterance with mouth and the nose (together) is अनुनासिकः
- तुल्य-आस्य-प्रयत्नं सवर्णम् 1.1.9 - (varnas that are similar regarding the (sources of their utterances in) the mouth and in the effort (taken to utter them) are savarnas. (Eg. क & ख are both uttered from the कण्ठ and are savarnas)

# शास्त्र-निरूपण-पद्धतिः

# ग्रन्थे विषयस्य प्रतिपादन-प्रयोजकाः संरचनाः

# प्रमाणानि

ज्ञान/प्रमा
ज्ञातृ/प्रमातृ
Knower
ज्ञेय/प्रमेय
Object of Knowledge
ज्ञानभागिनः
प्रमाता प्रमाणैः प्रमेयस्य प्रमां प्राप्नोति
ज्ञानसाधन/प्रमाण
Means of Knowledge
इन्द्रिय-अर्थ-सन्निकर्ष
इन्द्रिय
चक्षु
श्रोत्र
घ्राण
रसन
त्वक्
मनस्
अर्थ = विषय
रूपादि
शब्द
गन्ध
रस
स्पर्श
सुखादि
अनुमान = व्याप्ति/परामर्श
युक्ति-प्रक्रिया
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
शब्द = आप्त-वाक्य (वाङ्मय)
उपमान = सादृश्य
कल्पन = उपपत्त्यभाव
अभाव = नास्तीति व्यवहार
इत्यादि

# शास्त्र-कार्यम्

- सामान्य-धर्म-दर्शनम् – असमानेषु विषमेषु च सामान्य-धर्मस्य दर्शनम् = Abstraction of common properties in diverse objects

- विशेष-धर्म-दर्शनम् – सामान्येषु विशेष-दर्शनम् = Classification by grasping special features in common objects

# लक्षणस्य सारोद्धरण-स्वरूपम्

| + | अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | लृ | ए | ऐ | ओ | औ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | आ | ए | ए | ओ | ओ | अर् | अर् | अल् | ऐ | ऐ | औ | औ |
| आ | आ | आ | ए | ए | ओ | ओ | अर् | अर् | अल् | ऐ | ऐ | औ | औ |
| इ | य | या | ई | ई | यु | यू | यृ | यॄ | य्लृ | ये | यै | यो | यौ |
| ई | य | या | ई | ई | यु | यू | यृ | यॄ | य्लृ | ये | यै | यो | यौ |
| उ | व | वा | वि | वी | ऊ | ऊ | वृ | वॄ | व्लृ | वे | वै | वो | वौ |
| ऊ | व | वा | वि | वी | ऊ | ऊ | वृ | वॄ | व्लृ | वे | वै | वो | वौ |
| ऋ | र | रा | रि | री | रु | रू | ॠ | ॠ | र्लृ | रे | रै | रो | रौ |
| ॠ | र | रा | रि | री | रु | रू | ॠ | ॠ | र्लृ | रे | रै | रो | रौ |
| लृ | ल | ला | लि | ली | लु | लू | लृ | लृ | लृ | ले | लै | लो | लौ |
| ए | ए | अया | अयि | अयी | अयु | अयू | अयृ | अयॄ | अय्लृ | अये | अयै | अयो | अयौ |
| ऐ | आय | आया | आयि | आयी | आयु | आयू | आयृ | आयॄ | आय्लृ | आये | आयै | आयो | आयौ |

| + | अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | लृ | ए | ऐ | ओ | औ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | आ | ए | ए | ओ | ओ | अर् | अर् | अल् | ऐ | ऐ | औ | औ |
| आ | आ | आ | ए | ए | ओ | ओ | अर् | अर् | अल् | ऐ | ऐ | औ | औ |
| इ | य | या | ई | ई | यु | यू | यृ | यॄ | य्लृ | ये | यै | यो | यौ |
| ई | य | या | ई | ई | यु | यू | यृ | यॄ | य्लृ | ये | यै | यो | यौ |
| उ | व | वा | वि | वी | ऊ | ऊ | वृ | वॄ | व्लृ | वे | वै | वो | वौ |
| ऊ | व | वा | वि | वी | ऊ | ऊ | वृ | वॄ | व्लृ | वे | वै | वो | वौ |
| ऋ | र | रा | रि | री | रु | रू | ॠ | ॠ | र्लृ | रे | रै | रो | रौ |
| ॠ | र | रा | रि | री | रु | रू | ॠ | ॠ | र्लृ | रे | रै | रो | रौ |
| लृ | ल | ला | लि | ली | लु | लू | लृ | लृ | लृ | ले | लै | लो | लौ |
| ए | ए | अया | अयि | अयी | अयु | अयू | अयृ | अयॄ | अय्लृ | अये | अयै | अयो | अयौ |
| ऐ | आय | आया | आयि | आयी | आयु | आयू | आयृ | आयॄ | आय्लृ | आये | आयै | आयो | आयौ |
| ओ | ओ | अवा | अवि | अवी | अवु | अवू | अवृ | अवॄ | अव्लृ | अवे | अवै | अवो | आवो |
| औ | आव | आवा | आवि | आवी | आवु | आवू | आवृ | आवॄ | आव्लृ | आवे | आवै | आवो | आवौ |

# Hard *vs.* Soft sciences

# परिवर्तिनि विषये नियमानां संरचना-स्वरूपम्

# सङ्गति-प्रकाराः

- अन्तर्भाव-सङ्गतिः (Inclusion)
- आनन्तर्य-सङ्गतिः (Order)
- अवान्तर-सङ्गतयः (Others)
  - आक्षेपः - objection
  - दृष्टान्तः - illustration
  - प्रत्युदाहरणम् – counter example
  - प्रसङ्गः - context
  - हेतु-हेतुमद्-भावः – cause –effect relation
  - अपवादः इ. – exception etc.

# वाङ्मयस्य सूत्राणां ग्रथनं ग्रन्थः

- प्रमुखाः सूत्र-ग्रन्थाः
    - अष्टाध्यायी – पाणिनिः
    - योगसूत्राणि – पतञ्जलिः
    - ब्रह्मसूत्राणि – बादरायण-व्यासः
    - मीमांसासूत्राणि – जैमिनिः
    - न्यायसूत्राणि – गौतमः
    - वैशेषिकसूत्राणि – कणादः

# तन्त्रयुक्तिः

उदाहरणानि -

- अमरकोशे
- अर्थशास्त्रे
- आयुर्वेदे
- इतरत्र

# सूत्र-लक्षणम्

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**

**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।।**

वायुपुराणे पूर्वार्धे 59.117

**[अल्पाक्षरम् असन्दिग्धं सारवत् विश्वतोमुखम्।**

**अस्तोभम् अनवद्यं च सूत्रं सूत्रविदः विदुः।।]**

Those who know (the nature of) sutras knew it to be - composed least syllables, unambiguous, comprising the essence/gist (of concept to be conveyed), universal (in application, devoid of additional syllables in vain and error-free

# भाष्य-लक्षणम्

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्र-अनुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

Those who knew (the nature of a bhashya) knew it to be as - wherein the meaning of the sutra(s) is explained with the words that follow (the import of) the sutra(s) closely, and the words of itself (the bhashya) are explained.

# भारतीय-ग्रन्थ-प्रभेदाः

# तात्पर्योन्नायक-विषय-विश्लेषक-निर्देशाः

# ग्रन्थ-तात्पर्य-निर्णयः

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्।

अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।

[उपक्रम-उपसंहारौ अभ्यासः अपूर्वता फलम्।

अर्थवाद-उपपत्ती च लिङ्गं तात्पर्य-निर्णये।।]

The introduction and the conclusion, repetition, novelty, purpose / consequence, glorification and logic – these are the determinants in determination of the import (of the doctrine prescribed in a discourse).

# वाङ्मयस्य प्रभेदाः

वाङ्मय
कर्त्राधारेण
दृष्ट
निगम
ऋगादि-वेद-चतुष्टय
प्रोक्त
गुरु-प्रणीत-वेदसंहिता-इतर-वाङ्मय
ब्राह्मण-वेदाङ्ग-इतिहास-पुराणादि
उपज्ञात
व्यक्ति-विशिष्ट-प्रणीत-शास्त्र
कृत
कवि-कल्पित
व्याख्यान
मूल-ग्रन्थ-उपपादनात्मक
भाष्यादि
मूलस्य आधारेण
वैदिक
अष्टादश-विद्यास्थानानि
तन्मूलक-शास्त्राणि
अवैदिक
चार्वाक-बौद्ध-दर्शनादि
तन्मूलक-शास्त्राणि
अभिजात/साहित्यिक
प्रयोगस्य आधारेण
दृष्ट
नाट्य
श्रव्य
गद्य
आख्यान
कथा
पद्य
महाकाव्य
खण्डकाव्य/गीतिकाव्य
प्रसङ्गकाव्य
मुक्तककाव्य
स्तोत्रकाव्य
चम्पू

# अधिकरण-रचना

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः।**

**सङ्गतिश्चेति पञ्चाङ्गं प्राचोऽधिकरणं विदुः।।**

**[विषयः विशयः च एव पूर्वपक्षः तथा उत्तरः।**

**सङ्गतिः च इति पञ्च अङ्गं प्राचः अधिकरणं विदुः।।]**

Topic, doubt, prima facie argument, conclusion and topical relation – these are the five limbs known to the ancient (academicians) as adhikaraṇa.

# सङ्गतिः - अधिकरणयोः अर्थशः यौक्तिकः सम्बन्धः

# सङ्गतिः

**सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा।**
**निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते।।**

**[सप्रसङ्गः उपोद्घातः हेतुता अवसरः तथा।**
**निर्वाहक-ऐककार्यत्वे षोढा सङ्गतिः इष्यते।।]**

Sangati is of six types – contextual, introductory, causal, sequential, co-managed and the one oriented to accomplish same ends.

# सङ्गति-प्रकाराः

- अन्तर्भाव-सङ्गतिः (Inclusion)
- आनन्तर्य-सङ्गतिः (Order)
- अवान्तर-सङ्गतयः (Others)
  - आक्षेपः - objection
  - दृष्टान्तः - illustration
  - प्रत्युदाहरणम् – counter example
  - प्रसङ्गः - context
  - हेतु-हेतुमद्-भावः – cause –effect relation
  - अपवादः इ. – exception etc.

# दर्शन-विभागः

दर्शनम्
नास्तिकम्
आस्तिकम्
चार्वाक-
हैतुकम् (आनुमानिकम्)
अहैतुकम् (आगमिकम्)
बौद्ध-
जैन-
वेदान्त-
पूर्वमीमांसा
न्याय-
वैशेषिक-
साङ्ख्य-
योग-

# वैदिकं तात्पर्यग्रहणम्

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।**
**बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति।।**

पद्मपुराणम् 1.2.52

**[इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्।**
**बिभेति अल्पश्रुतात् वेदः माम् अयं प्रतरिष्यति।।]**

(The import of) the Vedas should be completed (comprehended) with (study of) Itihāsas and Purāṇas. The Veda fears the ill heard (ill learned that) this (person) is bound to deceive me.

# कालविषयकं भारतीयचिन्तनम्

- समयः एकदिग्गामिनी रेखा इव नास्ति, स च चक्राकारः अस्ति। अतः अस्मिन् चिन्तने कश्चिदागमः अपरस्मात् पूर्वतरः अस्तीति विचारः अग्राह्यः अस्ति। सर्वा प्रमा काले युगपदुपलभ्यते।
- लिखिताकारे ज्ञानस्य प्रस्तुतिः काले क्वचित् भवति परन्तु तदात्मकं चिन्तनं सर्वदा वर्तत एव इति स्थिते कस्यचन विचारस्य अस्तित्वं तद्गत-लेखनात् परमेव जायत इत्येतद्-भारतीय-ज्ञान-परम्परायां न अभ्युपगम्यते।
- श्रुति-परम्परा-स्मृति-परम्परात्मिका भवति भारतीयज्ञानपरम्परा। लेखनं परस्मिन् काले जातम्।वेदाकारेण विद्या नित्या अस्ति। लेखनाभावे तेषां प्रामाण्यं न हीयते। प्रत्युत लिखितग्रन्थानाम् अपेक्षया तेषां स्वरूपम् अनाहतम् अस्ति।

# लेखनमधिकृत्य भारतीयमतम्

- लिखित-संहिता एव प्रमाणमिति मतम् अर्वाचीनम् अस्ति। पूर्वं तावत् बहुभ्यः सहस्राब्धेभ्यः वक्तारः स्ववचः अमूल्यं मन्यतन्ते स्म इत्यतः वाग्दानमेव प्रमाणमिति मतमासीत्, अथ किं, तदर्थं परतःप्रामाण्यं नावलम्ब्यते स्म।
- प्रामाण्य-परीक्षणार्थं निकषाः अस्मदुपरि अस्वदेशीयपक्षेभ्यः निर्बन्धतया आरोपिताः सन्ति। नैजाः समस्याः नैजपरिहारेभ्यः एव सुष्ठु समाधातुं योग्याः, तेषां स्वारसिकत्वात्। अस्वारसिकपरिहारैः स्वारसिकसमस्याः समाधातुं न शक्याः।
- विभजनात्परं वेदाः वेदव्यासेन मौखिक-परम्परया एव प्रवर्तिताः। व्यासेन महाभारतं लिखितरूपेणैव दत्तं, परन्तु, तादृशसाहित्यानां यदा प्रतयः कृताः तदा प्रतिनिर्मातॄणाम् अनवधानादि-दोषवशात् नैकानि पाठान्तराणि संस्करणानि च निर्मितानि।

# ज्ञान-परम्परायाः विच्छेद-हेतवः

- युद्ध-कलहादिना सामाजिकी अस्थिरता
- महता परिमाणेन जनानां स्थानान्तरणम्
  - ततः तदनुचराणां विच्युतिः
- पोषणाभावेन आचार्याणां जीवनवृत्तौ परिवर्तनानि
- कलहे आचार्याणां विद्याकेन्द्राणां च क्षतिः

# व्याख्याः किं कुर्वन्ति?

**पदच्छेदः अन्वयोक्तिः समासादिविवेचनम्।**
**पदार्थबोधस्तात्पर्यं व्याख्यावयवपञ्चकम्।।**

**[पदच्छेदः अन्वय-उक्तिः समासादि-विवेचनम्।**
**पदार्थ-बोधः तात्पर्यं व्याख्या-अवयव-पञ्चकम्।।]**

The five limbs of a commentary are – division of words, elucidation of the relation (between word meanings in a sentences), analysis of compunds etc., enlightening the meaning of words (and explaining) the import (of the text intended by the composer).

# न्यायकोशे पराशरपुराण-वचनम् -

**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम्।।**

**[पदच्छेदः पदार्थोक्तिः विग्रहः वाक्य-योजना।**
**आक्षेपेषु समाधानं व्याख्यानं पञ्च-लक्षणम्।।]**

The five features of a commentary – division of words, giving the meaning of words, analysis of grammatical complexes, indicating the construction and answering of objections

# भारतीय-ग्रन्थ-प्रभेदाः

# व्याख्यान-लक्षणम्

| | |
|---|---|
| **पदच्छेदः** | • सन्धि-विच्छेदः |
| **पदार्थोक्तिः** | • अर्थस्य स्पष्टीकरणम् |
| **विग्रहः** | • समासस्य विग्रहः |
| **वाक्य-योजना** | • कारकम् अनुसृत्य पदार्थानाम् अन्वयः<br>• व्याख्यान-भेद-कारणम् |
| **आक्षेप-समाधानम्** | • युक्त्या प्रमाणेन स्वमतस्य निरूपणम् |

# पदच्छेदः - उदाहरणम्

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म **कुर्वन्नाप्नोति** किल्बिषम्।।4.21।।

- भगवद्गीता

[निराशीः यतचित्त-आत्मा त्यक्त-सर्व-परिग्रहः।
शारीरं केवलं कर्म **कुर्वन्नाप्नोति** किल्बिषम्।।]

**कुर्वन्नाप्नोति = कुर्वन् आप्नोति**
**कुर्वन्नाप्नोति = कुर्वन् न आप्नोति [न प्राप्नोति किल्बिषम्]**

**–> शाङ्कर-भाष्ये**

# पदार्थोक्तिः - उदाहरणम्

**त्यागाय** सम्भृतार्थानां सत्याय मित-भाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥

रघुवंशः 1.7

मल्लिनाथस्य सञ्जीवनी-व्याख्या

**त्यागाय = सत्पात्रे विनियोगः त्यागः**

# वाक्य-योजना - उदाहरणम्

दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः।।
व्याप्य देहमशेषेण ज्वरमापादयन्ति हि।
सुश्रुतसंहिता 39.15b & 16a

[दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः।।
व्याप्य देहम् अशेषेण ज्वरम् आपादयन्ति हि।]

वाक्य-योजना - प्रकुपिताः दोषाः हि स्वैः प्रकोपणैः स्वेषु कालेषु अशेषेण देहम् व्याप्य ज्वरम् आपादयन्ति।

# व्याख्यातृ-स्वातन्त्र्यम्

- विषय-निर्वचने व्याख्यातुरेव स्वातन्त्र्यम्, न पुनः ग्रन्थकारस्य तत्र स्वामित्वम्
- भगवद्गीतायाः शतशः निर्वचनानि सन्ति। निर्वचनावकाशस्य आधिक्यं तदीय-साहित्यस्य मूल्यं महत्त्वं च सूचयति
- वसुबन्धुरचितस्य अभिधर्मकोषस्य व्याख्याद्वयम्। एका तावत् वसुबन्धुनैव रचिता अपरा च सङ्गभद्रेण रचिता च। तत्र सङ्गभद्रः स्वीयं निर्वचनं वसुबन्धोः निर्वचनात् प्रामाणिकमस्तीति मनुते।
- व्याख्याभेदः मतभेदं जनयति, स च वादपरम्परायां सुखेन आमन्त्र्यते – वादे वादे जायते तत्त्व-बोधः
- परम्परायां (सं)वादे श्रद्धा विहिता। उदा. उपनिषद्, महाभारतम्.

# व्याकख्यातुः प्रतिज्ञा

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।

नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते।।

मल्लिनाथ while commenting on कुमार-सम्भव

[इह अन्वय-मुखेन एव सर्वं व्याख्यायते मया ।

न अमूलं लिख्यते किञ्चित् न अनपेक्षितमुच्यते।।]

Herein, everything is commented by me by way of relating (the word meanings of the verses being commented on). Nothing is written baselessly (and) nothing uncalled for is said.

# पस्पशाह्निकम् – वाद-पद्धति

- अथ गौः इति अत्र कः शब्दः।
- किं यत् तत् सास्नालाङ्गूलककुदखुरविषाणि अर्थरूपं सः शब्दः।
- न इति आह।
- द्रव्यं नाम तत्।
- यत् तर्हि तत् इङ्गितं चेष्टितं निमिषितं सः शब्दः।
- न इति आह।
- क्रिया नाम सा।
- यत् तर्हि तत् शुक्लः नीलः कृष्णः कपिलः कपोतः इति सः शब्दः।
- न इति आह।
- गुणः नाम सः।
- यत् तर्हि तत् भिन्नेषु अभिन्नं छिन्नेषु अच्छिन्नं सामान्यभूतं सः शब्दः।
- न इति आह।
- आकृतिः नाम सा।
- कः तर्हि शब्दः।
- येन उच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययः भवति सः शब्दः।
- अथ वा प्रतीतपदार्थकः लोके ध्वनिः शब्दः इति उच्यते।
- तद्यथा शब्दं कुरु मा शब्दं कार्षीः शब्दकारी अयं माणवकः इति।
- ध्वनिं कुर्वन् एवम् उच्यते। तस्मात् ध्वनिः शब्दः। कानि पुनः शब्दानुशासनस्य प्रयोजनानि।

  रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।

  रक्षार्थम् वेदानाम् अध्येयम् व्याकरणम्।
- लोपागमवर्णविकारज्ञः हि सम्यक् वेदान् परिपालयिष्यति।

# पस्पशाह्निकम् – वाद-पद्धति

- यदि तावत् शब्दोपदेशः क्रियते गौः इति एतस्मिन् उपदिष्टे गम्यते एतत् गाव्यादयः अपशब्दाः इति।
- अथ अपशब्दोपदेशः क्रियते गाव्यादिषु उपदिष्टेषु गम्यते एतत् गौः इति एषः शब्दः इति।
- किं पुनः अत्र ज्यायः।
- लघुत्वात् शब्दोपदेशः।
- लघीयान् शब्दोपदेशः गरीयान् अपशब्दोपदेशः।
- एकैकस्य शब्दस्य बहवः अपभ्रंशाः।
- तद्यथा।
- गौः इति अस्य शब्दस्य गावीगोणीगोतागोपोतलिकादयः अपभ्रंशाः।
- इष्टान्वाख्यानं खलु अपि भवति।
- अथ एतस्मिन् शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः गौः अश्वः पुरुषः हस्ती शकुनिः मृगः ब्राह्मणः इति एवमादयः शब्दाः पठितव्याः।
- न इति आह।
- अनभ्युपायः एषः शब्दानां प्रतिपत्तौ प्रतिपदपाठः।

# वास्तु वस्तु च

- पाश्चात्यं तत्त्वज्ञानं विज्ञानं च पदार्थानाम् आकृतिः सत्स्वरूपा, सा च क्वचिदादर्श-जगति विद्यन्ते इति चिन्तनाधारितम्। जगति विद्यमानाः पदार्थाः तादृश-आदर्श-आकृतीनां प्रतिरूपाः इति मन्यन्ते।
- आकृतिमधिकृत्य विचारः तदनुसृत्य उच्चोच्च-स्तेषु सारोद्धारः (abstraction) च बहुमूल्यं बौद्धिकं परिशीलनमिति चिन्त्यते। अतः पाश्चात्य जगति विज्ञानं सर्वं हि Formal Sciences इति उच्यते।
- भारतीयशास्त्रेषु वस्तु वास्तु च द्वे अपि तुल्यरूपेण चिन्त्येते।

# पस्पशाह्निकम् – वस्तु-वास्तु-दृष्ट्या भारतीयम् उदाहरणम्

- अतः सिद्धशब्दः एव उपात्तः न नित्यशब्दः अथ कं पुनः पदार्थं मत्वा एषः विग्रहः क्रियते सिद्धे शब्दे अर्थे सम्बन्धे च इति।
- आकृतिम् इति आह।
- कुतः एतत्।
- आकृतिः हि नित्या।
- द्रव्यम् अनित्यम्।
- मृत् कयाचित् आकृत्या युक्ता पिण्डः भवति।
- पिण्डाकृतिम् उपमृद्य घटिकाः क्रियन्ते।
- घटिकाकृतिम् उपमृद्य कुण्डिकाः क्रियन्ते।
- तथा सुवर्णं कयाचित् आकृत्या युक्तं पिण्डः भवति।
- पिण्डाकृतिम् उपमृद्य रुचकाः क्रियन्ते।
- रुचकाकृतिम् उपमृद्य कटकाः क्रियन्ते।
- कटकाकृतिम् उप्मृद्य स्वस्तिकाः क्रियन्ते।

# वास्तु वस्तु च

- वस्तु उपेक्ष्य केवलं वास्तुनि प्रवृत्तौ लोककल्याणे ह्रासः भवति।
- वास्तुनि प्रगतेः परिणामं भारतीयशास्त्रज्ञाः अजानन्, ततः तस्य प्रयोगः शत्रुदमने अकुर्वन्, न पुनः सार्वत्रिक-लोककल्याणे तेन प्रभावः कोऽपि जातः।
- भारतीय-चिन्तन-दृष्ट्या आकृत्यपेक्षया गुणोत्कर्षः अतिशेते। [Focus on quality superseded focus on form in Indic worldview.]

# भारतीयज्ञान-परम्परायां वादः सुसमन्वितः

- मिश्रदेशीयैः सह भारतीय-खगोलज्ञानां विज्ञानाधारित-चर्चाः इतिहासे उपलभ्यन्ते।
- ख्रैस्त-इस्लाम-मतस्थैः सह वादः/चर्चा न अभवत् यतो हि तौ धर्मौ न स्तः, परं मते स्तः। अपि च तयोः सह सुशान्तरीत्या संवादाय अवकाशः नैव लब्धः

# सनातन-धर्मस्य मतम्

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

शिव-महिम्न-स्तोत्रम् 7

[त्रयी साङ्ख्यं योगः पशुपति-मतं वैष्णवम् इति प्रभिन्ने प्रस्थाने परम् इदम् अदः पथ्यम् इति च।

रुचीनां वैचित्र्यात् ऋजु-कुटिल-नाना-पथ-जुषां नृणाम् एको गम्यः त्वमसि पयसाम् अर्णवः इव॥]

# धार्मिक-वादः

- हिन्दूधर्मः इति न कोऽपि धर्मः विद्यते। मूलतः सः सनातनधर्मः भवति। बौद्ध-जैनादि मतानि सनातनधर्मस्य घटकभूतानि सन्ति। अतः तैः सह वादः/चर्चा प्रवर्तिता। किं बहुना नास्तिकैः सह अपि वादः प्रवर्तितः।
- ये आक्रमणाय युद्धार्थं वा सम्प्राप्ताः तैः सह वादस्य चर्चायाः वा कृते सम्भावना नासीदेव।
- वादाः नाम वैचारिकाः युद्धाः एव। तत्र च सैद्धान्तिकरीत्या जन्म-मृत्योः एकतर-भाव-अवशेषावस्था भवति स्म।
- नूतन-सिद्धान्तोपस्थापनार्थं वादोत्कर्ष-द्वारा प्राचीनसिद्धान्तानां प्रामाण्यस्य उन्मूलनम् अवश्यम् आपतितम्।

कथा = चर्चा

वाद-कथा
- तत्त्वज्ञानार्थम्

वितण्डा-कथा
- केवलं जयार्थम्

जल्प-कथा
- केवलं परस्य पराजयार्थम्

# तन्त्रयुक्तिः

उदाहरणानि -

- अमरकोशे
- अर्थशास्त्रे
- आयुर्वेदे
- इतरत्र

# अमरकोशे Encoding

**लिङ्गज्ञानोपायः**

प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ।। ३ ।।

The gender of those words is given which cannot be distinguished either by their terminations or by their associations with other words whose gender is known.

लिङ्गज्ञानोपायमाह-प्रायश इति ।

प्रायशः बाहुल्येन रूपस्यावान्तररूपभेदेन स्त्रीपुंनपुंसकं ज्ञेयम् ।
यथा - पुं - संवत्सरोवत्सरोऽब्दः
स्त्री - कादम्बिनी मेघमाला
नपुं - गगनमनन्तं सुरवर्त्म खं
कुत्रचित्साहचर्यात्,
यथा - पुं - भानुःकरः
स्त्री - अश्वयुगश्विनी
नपुं - वियद्विष्णुपदं
क्वचित्तेषां स्त्र्यादीनां विशेषतो विधानात्कथनात्,
यथा - पुं - दुन्दुभिःपुमान्
स्त्री - दीधितिः स्त्रियाम्
नपुं - रोचिःशोचिरुभे क्लीबे

# अमरकोशे Encoding

**लिङ्गज्ञानोपायः**

भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ।। ४ ।।

But throughout the work the form alone will, in most cases, reveal the gender, as dvandva compounds have not been admitted, not words associated together which are unconnected in meaning.

Eg: - कुलिशं भिदुरं पविः (अ.१-१-१४) इति,

Eg: - नभः, खं श्रावणो नभाः । (अ.३-३-२३२) इति, न तु खश्रावणौ नभसी इति

Eg: - स्तवः, स्तोत्रं नुतिः स्तुतिरिति (अ.१-६-११), न तु स्तुतिः स्तोत्रं स्तवो नुतिरिति ।

Eg: - वर्गाः पृथ्वी पुरक्ष्माभृद्वनौषधिमृगादिभिः (अ.२-१-१) इति,

Eg: - अप्सरोयक्षरक्षोगन्धर्वकिन्नराः(अ.१-१-११) माता-पितरौ पितरौ ।

एते स्वस्वपर्यायेषूक्ता एव । तथा तेषां क्रमादृते क्रमं विना सङ्करो न कृतः ।

# मङ्गलश्लोकः कः?

काव्यादर्शे -

सर्गबन्धो महाकव्यम् उच्यते तस्य लक्षणम् ।

**आशी-र्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्** ।। १.१४ ।।

# मङ्गलप्रकाराः

- आशीर्वादात्मकम्
- नमस्कारात्मकम्
- वस्तुनिर्देशात्मकम्
- आशीर्वादात्मकम् + वस्तुनिर्देशात्मकम्
- नमस्कारात्मकम्  + वस्तुनिर्देशात्मकम्
- आशीर्वादात्मकम् + नमस्कारात्मकम्
- आशीर्वादात्मकम् + नमस्कारात्मकम् + वस्तुनिर्देशात्मकम्

आशीर्वादात्मकम् –

न्यायसिद्धान्त-मुक्तावल्याम् –

चूडामणीकृत-विधु-र्वलयीकृत-वासुकिः।

**भवो भवतु भव्याय** लीलाताण्डव-पण्डितः।।

नमस्क्रियात्मकम् –

रघुवंशे –

वागर्थाविव सम्पृक्तौ वागर्थ-प्रतिपत्तये।
जगतः पितरौ **वन्दे पार्वती-परमेश्वरौ**।।

# वस्तुनिर्देशात्मकम् –

**कुमारसम्भवे –**

**अस्त्युत्तरस्यां दिशि देवतात्मा**

**हिमालयो नाम नगाधिराजः।**

**पूर्वापरौ तोयनिधी वगाह्य**

**स्थितः पृथिव्या इव मानदण्डः।।**

आशीर्वादात्मकम् + वस्तुनिर्देशात्मकम्

स्वप्नवासवदत्तायाम् –

**उदयनवेन्दुसवर्णावासवदत्ताबलौ** बलस्य त्वाम्।

**पद्मावतीर्णपूर्णौ वसन्तकम्रौ** भुजौ पाताम्।।

नमस्कारात्मकम् + वस्तुनिर्देशात्मकम्

तर्कसङ्ग्रहे -

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।

**बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः॥१॥**

आशीर्वादात्मकम् + नमस्कारात्मकम्

श्रीशारदा-प्रार्थनायाम् –

नमस्ते शारदे देवि काश्मीरपुरवासिनि ।

त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥१॥

आशीर्वादात्मकम् + नमस्कारात्मकम् + वस्तुनिर्देशात्मकम्

भाट्टदीपिकायाम् -

विश्वेश्वरं नमस्कृत्य खण्डदेवः **सतां मुदे** ।
तनुते तत्प्रसादेन **संक्षिप्तां भाट्टदीपिकाम्** ।।

# मङ्गलवादः

तर्कसङ्ग्रहे -

**निधाय** हृदि विश्वेशं विधाय गुरुवन्दनम्।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः॥१॥

तर्कसङ्ग्रह-दीपिकायाम् -

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम्।
टीकां शिशुहितां कुर्वे तर्कसङ्ग्रहदीपिकाम्॥

- चिकीर्षितस्य ग्रन्थस्य निर्विघ्न-परिसमाप्त्यर्थं शिष्टाचार-अनुमित-श्रुति-बोधित-कर्तव्यताक-इष्टदेवता-नमस्कारात्मकं मङ्गलं शिष्य-शिक्षायै ग्रन्थतो निबन्ध्नन् चिकीर्षितं प्रतिजानीते, **निधायेति** ।

# मङ्गलवादः

- ननु मङ्गलस्य समाप्ति-साधनत्वं नास्ति। मङ्गले कृतेऽपि कादम्बर्यादौ समाप्ति-अदर्शनात्, मङ्गल-अभावेऽपि किरणावल्यादौ समाप्ति-दर्शनाच्च अन्वय-व्यतिरेकाभ्यां व्यभिचाराद् इति चेत् न, कादम्बर्यादौ विघ्न-बाहुल्यात् समाप्ति-अभावः। किरणावल्यादौ ग्रन्थाद् बहिरेव मङ्गलं कृतम् अतो न व्यभिचारः।

# मङ्गलवादः

- ननु मङ्गलस्य (ग्रन्थादौ) कर्तव्यत्वे किं प्रमाणमिति चेत् न। शिष्टाचार-अनुमित-श्रुतेः एव प्रमाणत्वात्। तथा हि **मङ्गलं वेद-बोधित-कर्तव्यताकम् अलौकिक-अविगीत-शिष्टाचार-विषयत्वाद्**, दर्शादिवत्।
- भोजनादौ व्यभिचारवारणाय अलौकिकेति। रात्रिश्राद्धादौ व्यभिचार-वारणाय अविगीतेति। शिष्टपदं स्पष्टार्थम्। न कुर्यान्निष्फलं कर्म इति जलताडनादेरपि निषिद्धत्वात्।

# ‘चमत्कारिकं’ मङ्गलम् -

न्यायसिद्धान्त-मुक्तावल्याम् -

स**द्द्रव्या** **गुण**गुम्फिता सुकृतिनां स**त्कर्म**णां ज्ञापिकाः
स**त्सामान्य****विशेष****नित्यमिलिता**(ऽ)**भाव**प्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां **सद्युक्ति**रेषा चिरम् ॥

# उद्देशः – उदाहरणम् - तर्कसङ्ग्रहः

- द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय-अभावाः सप्त पदार्थाः
- तत्र द्रव्याणि पृथिवी-अप्-तेजः-वायु-आकाश-काल-दिक्-मनांसि नवैव
- रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्म-अधर्म-संस्काराः चतुर्विंशति गुणाः
- उत्क्षेपण-अपक्षेपण-आकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि
- परम्-अपरं च इति द्विविधं सामान्यम्
- नित्य-द्रव्य-वृत्तयः विशेषाः तु अनन्ताः एव
- समवायः तु एक एव
- अभावः चतुर्विधः – प्रागभाव-प्रध्वंसाभाव-अत्यन्ताभाव-अन्योन्याभावः च इति

# लक्षणस्य लक्षणम् – तर्कसङ्ग्र-दीपिका

- लक्ष्य-एकदेश-अवृत्तित्वम् अव्याप्तिः, यथा गोः कपिलत्वम्
- अलक्ष्ये लक्षणस्य वर्तनम् अतिव्याप्तिः, यथा गोः शृङ्गित्वम्
- लक्ष्य-मात्र-अवृत्तित्वम् असम्भवः, यथा गोः एक-शफवत्त्वम्
- एतत्-दोष-त्रय-रहित-धर्मः लक्षणम्। स एव असाधारण-धर्मः इति उच्यते। - सास्नावत्त्वं गोः लक्षणम्

# लक्षणम् – उदाहरणम् - तर्कसङ्ग्रहः

- गन्धवती पृथिवी – गन्धवत्त्वं पृथिव्याः लक्षणम्
- शीत-स्पर्शवत्यः आपः – शीत-स्पर्शः जलस्य लक्षणम्
- उष्ण-स्पर्शवत् तेजः – उष्ण-स्पर्शः तेजसः लक्षणम्
- रूप-रहित-स्पर्शवान् वायुः – रूप-रहितत्वे सति स्पर्शवत्त्वं वायोः लक्षणम्
- शब्द-गुणकम् आकाशम् – शब्द-गुणवत्त्वम् आकाशस्य लक्षणम्

# परीक्षा – प्रमाणैः

ज्ञानभागिनः
प्रमाता प्रमाणैः प्रमेयस्य प्रमां प्राप्नोति
ज्ञातृ/प्रमातृ
Knower
ज्ञेय/प्रमेय
Object of Knowledge
ज्ञान/प्रमा
ज्ञानसाधन/प्रमाण
Means of Knowledge
इन्द्रिय-अर्थ-सन्निकर्ष
इन्द्रिय
चक्षु
श्रोत्र
घ्राण
रसन
त्वक्
मनस्
अर्थ = विषय
रूपादि
शब्द
गन्ध
रस
स्पर्श
सुखादि
अनुमान = व्याप्ति/परामर्श
युक्ति-प्रक्रिया
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
शब्द = आप्त-वाक्य (वाङ्मय)
उपमान = सादृश्य
कल्पन = उपपत्त्यभाव
अभाव = नास्तीति व्यवहार
इत्यादि

# परीक्षा – प्रमाणैः – तर्कः - उदाहरणम्

- प्रतिज्ञा - पर्वतः वह्निमान् धूमात्
- आक्षेपः - पर्वते धूमः अस्तु वह्निः मास्तु
- तर्कः – यदि वह्निः न स्यात् तर्हि धूमः अपि न स्यात्, तत्-जन्यत्वात्,

अस्ति च धूमः, अतः वह्निः अपि अस्ति

# सिद्धान्तः – उदाहरणम् - तर्कसङ्ग्रहः

- सर्वेषां पदार्थानाम् उक्तेषु एव अन्तर्भावात् सप्त एव पदार्थाः इति सिद्धम्

# वाङ्मयीन-शास्त्र-परम्परा-प्रवृत्तिः

- समाजे शास्त्राध्ययनार्थं नैके उपायाः आसन् –
  - राजाश्रये शास्त्रकाराः शास्त्राध्ययनं कुर्वन्ति स्म
  - विश्वविद्यालयाः सहस्रशः छात्रेभ्यः शास्त्राणि बोधयन्ति स्म
  - शास्त्रज्ञाः दिग्विजये वादकथया प्रतिपक्षिणः पराजयं नयन्ति स्म
  - आयुर्वेद-शिल्पशास्त्र-वास्तुविद्या-ज्योतिष-आगमादि-शास्त्रेषु प्रयोगद्वारा गुरु-शिष्यपरम्परया शास्त्रसूक्ष्माणि बोधयन्ति स्म
  - शिष्याः व्याख्याकरण-द्वारा स्व-आचार्यमतानि उपस्थापयन्ति स्म
  - शिष्याः वादग्रन्थ-रचनया च परमत-खण्डनं स्वमत-समर्थनं च कुर्वन्ति स्म

# वाद-कथा

14th Century (AD) – Contemporaries – Sri Vidyaranyasvamin, Sri Vedanta Desika, Sri Akshobhyatirtha

विद्यारण्य-अक्षोभ्यमुन्योः वादे वेदान्तदेशिकैः कृतं मध्यस्थम् -

**“असिना तत्त्वमसिना परतत्त्व-प्रभेदिना।**
**विद्यारण्यं महारण्यम् अक्षोभ्यमुनिः अच्छिनत्।।”**

# मीमांसा-दर्शन-परम्परा

Also refer to other prakarana-granthas and their commentaries @ http://14.139.60.114:8080/jspui/bitstream/123456789/701/5/Mimansa%20and%20its%20Historical%20Evolution.pdf & http://shodhganga.inflibnet.ac.in/bitstream/10603/138428/6/06_chapter%20i.pdf & https://www.kamakotimandali.com/advaita/mimamsaworks.html

# द्वैत-अद्वैत-वाद-परम्परा

- न्यायमृतम् – व्यासतीर्थः (1460-1539)
- अद्वैतसिद्धिः – मधुसूदन-सरस्वती (1540 – 1647)
- न्यायामृत-तरङ्गिणी – व्यास-रामाचार्यः (1550-1620),
  - कण्टकोद्धारः – आनन्दभट्टारकः (1530-1600), न्यायामृतामोदः – विजयीन्द्रतीर्थः (1514-1592)
- गुरुचन्द्रिका – गौडब्रह्मानन्दः (1660)
  - सिद्धिव्याख्या – बलभद्रः (1610)
- न्यायामृत-सौगन्ध्यम् – वनमालीमिश्रः
- चन्द्रिकाव्याख्या - विठ्ठलेशोपाध्यायः

Refer to Dvaita-Advaita Polemics - Intro by Prof. KT Pandurangi.pdf for other dialectic commentaries

# Indic Text Classification

# सूत्र-लक्षणम्

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।

अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।।

वायुपुराणे पूर्वार्धे 59.117

[अल्पाक्षरम् असन्दिग्धं सारवत् विश्वतोमुखम्।

अस्तोभम् अनवद्यं च सूत्रं सूत्रविदः विदुः।।]

Those who know (the nature of) sutras knew it to be - composed least syllables, unambiguous, comprising the essence/gist (of concept to be conveyed), universal (in application, devoid of additional syllables in vain and error-free

# भाष्य-लक्षणम्

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्र-अनुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।

Those who knew (the nature of a bhashya) knew it to be as - wherein the meaning of the sutra(s) is explained with the words that follow (the import of) the sutra(s) closely, and the words of itself (the bhashya) are explained.

# व्याख्यान-लक्षणानि – राजशेखरः - काव्यमीमांसायाम्

1. सूत्रणात् सूत्रम्
2. वृत्तिः – सूत्राणां सरल-सार-विवरणम्
3. पद्धतिः - सूत्र-वृत्ति-विवेचनम्
4. भाष्यम् - आक्षिप्य भाषणम्
5. समीक्षा – अन्तर्भाष्यम्

i. ब्रह्मसूत्रम् – बादरायणव्यासः
ii. काशिकावृत्तिः – जयादित्य-वामनौ
iii. प्रमाणपद्धतिः – जयतीर्थाचार्यः
iv. ब्रह्मसूत्र-भाष्यम् – शङ्कराचार्यादयः
v. महाभाष्यवाक्यानि – पतञ्जलिः

# व्याख्यान-लक्षणानि – राजशेखरः - काव्यमीमांसायाम्

1. चूर्णिः - अवान्तर-अर्थ-विच्छेदः
2. टीका - यथासम्भवम् अर्थस्य टीकनम्
3. पञ्जिका - विषम-पद-भञ्जिका
4. कारिका - अर्थ-प्रकाशन-कारिका
5. वार्त्तिकम् – उक्त-अनुक्त-दुरुक्तानां चिन्तनं यत्र प्रवर्तते

i. महाभाष्यम् - पतञ्जलिः
ii. उद्योतः – महाभाष्य-टीका – नागेशभट्टः
iii. चरकपञ्जिका – स्वामीकुमार
iv. कारिकावली – विश्वनाथ-पञ्चाननः
v. श्लोकवार्त्तिकम् - कुमारिलभट्टः

# What do Commentaries do?

पदच्छेदः अन्वयोक्तिः समासादिविवेचनम्।
पदार्थबोधस्तात्पर्यं व्याख्यावयवपञ्चकम्।।

[पदच्छेदः अन्वय-उक्तिः समासादि-विवेचनम्।
पदार्थ-बोधः तात्पर्यं व्याख्या-अवयव-पञ्चकम्।।]

The five limbs of a commentary are – division of words, elucidation of the relation (between word meanings in a sentences), analysis of compunds etc., enlightening the meaning of words (and explaining) the import (of the text intended by the composer).

# न्यायकोशे पराशरपुराण-वचनम् -

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम्।।

[पदच्छेदः पदार्थोक्तिः विग्रहः वाक्य-योजना।
आक्षेपेषु समाधानं व्याख्यानं पञ्च-लक्षणम्।।]

The five features of a commentary – division of words, giving the meaning of words, analysis of grammatical complexes, indicating the construction and answering of objections

# व्याख्यान-लक्षणम्

| | |
|---|---|
| पदच्छेदः | • सन्धि-विच्छेदः |
| पदार्थोक्तिः | • अर्थस्य स्पष्टीकरणम् |
| विग्रहः | • समासस्य विग्रहः |
| वाक्य-योजना | • कारकम् अनुसृत्य पदार्थानाम् अन्वयः<br>• व्याख्यान-भेद-कारणम् |
| आक्षेप-समाधानम् | • युक्त्या प्रमाणेन स्वमतस्य निरूपणम् |

# पदच्छेदः - उदाहरणम्

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म **कुर्वन्नाप्नोति** किल्बिषम्॥4.21॥

- भगवद्गीता

[निराशीः यतचित्त-आत्मा त्यक्त-सर्व-परिग्रहः।
शारीरं केवलं कर्म **कुर्वन्नाप्नोति** किल्बिषम्॥]

**कुर्वन्नाप्नोति = कुर्वन् आप्नोति**

**कुर्वन्नाप्नोति = कुर्वन् न आप्नोति [न प्राप्नोति किल्बिषम्]**

**–> शाङ्कर-भाष्ये**

# पदार्थोक्तिः - उदाहरणम्

**त्यागाय** सम्भृतार्थानां सत्याय मित-भाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥

रघुवंशः 1.7

मल्लिनाथस्य सञ्जीवनी-व्याख्या

**त्यागाय = सत्पात्रे विनियोगः त्यागः**

# विग्रहः - उदाहरणम्

अथ वा **कृतवाग्द्वारे** वंशेऽस्मिन्पूर्वसूरिभिः।

मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः।।

रघुवंशः 1.4

[अथ वा **कृत-वाग्-द्वारे** वंशे अस्मिन् पूर्व-सूरिभिः।

मणौ वज्र-समुत्कीर्णे सूत्रस्य इव अस्ति मे गतिः।।]

सञ्जीवनी-व्याख्या – मल्लिनाथः –

**कृत-वाग्-द्वारे** – **कृतं** रामायणादि-प्रबन्ध-रूपा या **वाक्** सा **एव द्वारं** प्रवेशः यस्य तस्मिन्

# वाक्य-योजना - उदाहरणम्

दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः।।
व्याप्य देहमशेषेण ज्वरमापादयन्ति हि।
सुश्रुतसंहिता 39.15b & 16a

[दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः।।
व्याप्य देहम् अशेषेण ज्वरम् आपादयन्ति हि।।]

वाक्य-योजना - प्रकुपिताः दोषाः हि स्वैः प्रकोपणैः स्वेषु कालेषु अशेषेण देहम् व्याप्य ज्वरम् आपादयन्ति।

# आक्षेपस्य समाधानम् - उदाहरणम्

**७०९ । तृजकाभ्यां कर्तरि । (२-२-१५)**

कत्रैर्थतृजकाभ्यां षष्ट्या न समासः । अपां स्रष्टा । व्रजस्य भर्ता । ओदनस्थ पाचकः । "कर्तरि' किम् । इक्षणां भक्षणमिक्षुभक्षिका । पत्यथै भर्तृशब्दस्य याजकादित्वात्समासः । भूभर्ता । कथं तर्हि *घटानां निर्मातु त्रिभुवनविधातुश्च कलहः' इति ।' शेषषष्ठया समासः' इति कैयटः ।

**७१० । कर्तरि च । (२-२-१६)**

कर्तरि षष्ठया अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठया अभावात् ।

---

यद्यप्यत्र "कर्तृकर्मणोः कृति' इत्येव कर्मणि षष्ठी, न तु "उभयप्राप्तौ कर्मणि' इति सूत्रेण । तस्य सूत्रस्य कर्मण्येव षष्ठी, नतु कर्तरीति नियमपरत्वात् । तथापि नियमसूत्राणां विधिरूपेण निषेध रूपेण च द्वेधा प्रवृत्तेः स्वीकारान्न दोषः । शब्दानुशासनमित्यत्र तु वस्तुतः आचार्यस्य कर्तृत्वे ऽपि तस्यानुपादानादुभयप्राप्तावित् कृत्वोऽर्थप्रयोगे' इत्यतः प्रयोगे इत्यनुवृत्त्या कर्तृकर्मणोरुभयोः प्रयोग एव तस्य प्रवृत्तेः । "शेषे विभाषा' विशेषण विभाषे त्याश्रित्य उभयप्राप्तावित्यभावपक्षे "कर्तृकर्मणोः कृति' इत्यव षष्ठयाः प्राप्तिर्नायन्निषेध इत्यलम् । तृजकाभ्यां कर्तरि । कर्तरीति तृजकयोरेव विशेषणम्, श्रुतत्वात् । नतु षष्ठयाः । तदाह । कत्रैर्थतृजकाभ्यामिति । अपां स्रष्टा, व्रजस्य भर्तेति । 'ण्वुल्तृचौ' इति कर्तरि तृच् । "कर्तृकर्मणोः' इति कर्मणि षष्ठी । एवमोदनस्य पाचक इति पचे कर्तरि ण्वुल् । अकादेश इति विशेषः । इक्षुभाक्षिकेति । "त्रियां क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल । कर्मणि षष्ठया समासः । 'कर्मणि च' इति निषेधस्तु न । कर्तुः प्रयोग एव तत्प्रवृत्तेः । ननु भुवो भर्ता भूभर्तेत्यत्रापि निषेधस्यात् । नच भर्तृशब्दस्य याजकादौ पाठात् भवत्येव षष्ठीसमासः । "याजकादिभिश्च' इत्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम् । एवन्तर्हि व्रजस्य भर्तेत्यत्रापि समासप्रसङ्गादित्यत आह । पत्यर्थेति । याजकादौ पत्यर्थक स्यैव भर्तृशब्दस्य ग्रहणं, व्याख्यानात् । ततश्च व्रजस्य भर्तेत्यत्र "याजकादिभिश्च' इति समासो नेति भावः । कथं तहति ॥ त्रयाणां भुवनानां समाहारत्रिभुवनं 'तद्धितार्थ इति द्विगुः । अकारान्तोत्तरपदो द्विगुः स्त्रियाम्' इति तु न भवति । पात्राद्यन्तस्य नेत्युक्तेः । त्रिभुवनस्य विधातेति तृचा योगे कथं कर्मणि षष्ठयास्समास इत्याक्षेपः । परिहरति । शेषषष्ठयेति ॥ प्रत्यासत्त्या कारकषष्ठया एवायन्निषेध इति बहुष्विति सूत्रे कैयट आहेत्यर्थः । कर्तरि च ॥ कर्तरीयतत् षष्ठील्यनुवृत्ते अन्वेति । तदाह । कर्तरि षष्ठया इति। अकेनेति ॥ *

७०९ । तृजकाभ्यां कर्तरि । (२-२-१५)

कत्रैर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । व्रजस्य भर्ता । ओदनस्य पाचकः । 'कर्तरि' किम् । इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थ-भर्तृशब्दस्य याजकादित्वात्समासः । भूभर्ता । कथं तर्हि 'घटानां निर्मातु-स्त्रिभुवनविधातुश्च कलहः' इति । 'शेषषष्ठ्या समासः' इति कैयटः ।

७१० । कर्तरि च । (२-२-१६)

कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् ।

---

यद्यप्यत्र 'कर्तृकर्मणोः कृति' इत्येव कर्मणि षष्ठी, न तु 'उभयप्राप्तौ कर्मणि' इति सूत्रेण । तस्य सूत्रस्य कर्मण्येव षष्ठी, नतु कर्तरीति नियमपरत्वात् । तथापि नियमसूत्राणां विधिरूपेण निषेध-रूपेण च द्वेधा प्रवृत्तेः स्वीकाराज्ञ दोषः । शब्दानुशासनमित्यत्र तु वस्तुतः आचार्यस्य कर्तृत्वे-ऽपि तस्यानुपादानादुभयप्राप्तावित्यस्याप्रवृत्तेर्नायन्निषेधः । 'कृत्वोऽर्थप्रयोगे' इत्यतः प्रयोगे इत्यनुवृत्त्या कर्तृकर्मणोरुभयोः प्रयोग एव तस्य प्रवृत्तेः । 'शेषे विभाषा' विशेषेण विभाषे-त्याश्रित्य उभयप्राप्तावित्यभावपक्षे 'कर्तृकर्मणोः कृति' इत्येव षष्ठ्याः प्राप्तेर्नायन्निषेध इत्यलम् । **तृजकाभ्यां कर्तरि** ॥ कर्तरीति तृजकयोरेव विशेषणम्, श्रुतत्वात् । नतु षष्ठ्याः । तदाह । **कत्रर्थतृजकाभ्यामिति** ॥ **अपां स्रष्टा, व्रजस्य भर्तेति** ॥ 'ण्वुल्तृचौ' इति कर्तरि तृच् । 'कर्तृकर्मणोः' इति कर्मणि षष्ठी । एवमोदनस्य पाचक इति पचेः कर्तरि ण्वुल् । अकादेश इति विशेषः । **इक्षुभक्षिकेति** ॥ 'स्त्रियां क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्या समासः । 'कर्मणि च' इति निषेधस्तु न । कर्तुः प्रयोग एव तत्प्रवृत्तेः । ननु भुवो भर्ता भूभर्तेत्यत्रापि निषेधस्स्यात् । नच भर्तृशब्दस्य याजकादौ पाठात् भवत्येव षष्ठीसमासः । 'याजकादिभिश्च' इत्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम् । एवन्तर्हि व्रजस्य भर्तेत्यत्रापि समासप्रसङ्गादित्यत आह । **पत्यर्थेति** ॥ याजकादौ पत्यर्थक-स्यैव भर्तृशब्दस्य ग्रहणं, व्याख्यानात् । ततश्च व्रजस्य भर्तेत्यत्र 'याजकादिभिश्च' इति समासो नेति भावः । **कथं तर्हीति** ॥ त्रयाणां भुवनानां समाहारस्त्रिभुवनं 'तद्धितार्थ' इति द्विगुः । 'अकारान्तोत्तरपदो द्विगुः स्त्रियाम्' इति तु न भवति । पात्राद्यन्तस्य नेत्युक्तेः । त्रिभुवनस्य विधातेति तृचा योगे कथं कर्मणि षष्ठ्यास्समास इत्याक्षेपः । परिहरति । **शेषषष्ठ्येति** ॥ प्रत्यासत्त्या कारकषष्ठ्या एवायन्निषेध इति बहुष्विति सूत्रे कैयट आहेत्यर्थः । **कर्तरि च** ॥ कर्तरीत्येतत् षष्ठीत्यनुवृत्ते अन्वेति । तदाह । **कर्तरि षष्ठ्या इति** ॥ **अकेनेति** ॥ 'तृजकाभ्यां कर्तरि' इत्यतस्तदनुवृत्तेरिति भावः । **भवतः शायिकेति** ॥ 'स्त्रियां क्तिन्' इत्यधिकारे